इयदागमोक्तयुक्तिप्रचयाद्यदुपार्जितं मया सुकृतम् । तेन ममास्तु विशिष्टा, निरन्तरं बोधिबीजाप्तिः ॥ ३२ ॥

अस्मिन्नत्नविपत्नपत्नातिमिकप्रासाग्रहप्रस्फुरत्–सत्पद्मौघातिमिङ्गले कलजयश्रीमन्दिरे सुन्दरे ।
उद्यद्भूरिविचारचारुलहरीप्रव्यक्तयुक्त्यावली–मुक्ताः स्वच्छजले चिरं मणिगणैः क्रीडन्तु ते धीवराः ॥ ३३ ॥

यावद्दिव्यवधूविलाससरसिकः स्वर्भोगभङ्गीसुखं, जंभारातिरसौ भुनक्ति भगवानुद्भूतभाग्याद्भुतः ।
तावत्सर्गनिरर्गलान्तरतमःस्तोमप्रणाशक्षमं, शस्तं शास्त्रमिदं निरस्तदुरितं पृथ्वीतले नन्दतात् ॥ ३४ ॥

यावद्व्योमतरङ्गिणीजलमिलत्कल्लोलमालालस–द्दिग्दन्तावलकीर्णवर्ण्यसलिला सेकप्रणष्टश्रमम् ।
ज्योतिश्चक्रमनुक्रमेण नभसि भ्रामत्यजस्रं क्षितौ, तावन्नन्दतु शास्त्रमेतदनघं विद्वज्जनानन्दनम् ॥ ३५ ॥

दर्शनहिमकरगगनग्रैवेयकसङ्ख्यवत्सरे जातः । आश्विनसिति तुर्यायां, यत्नः सफलो गुरुमहिम्ना ॥ ३६ ॥

॥ इति श्रीमदकब्बरभूपालविशालचित्तालवालविवर्द्धितवृपरसालसालातिशालिशीलजगद्गुरुभट्टारकश्रीहीरविजयसूरिशिष्योपाध्यायश्रीश्रीकीर्त्तिविजयगणिसमुच्चिते श्रीविचाररत्नाकरे संकीर्णविचारसमुच्चयनाम्नीवेला समाप्ता ॥



॥ इति श्रीविचाररत्नाकरः समाप्तः ॥

इति जगद्गुरुश्रीहीरविजयसूरीश्वरशिष्योपाध्याय-
श्रीकीर्त्तिविजयविरचितो विचाररत्नाकरः समाप्तः। श्रीः

इति श्रेष्ठि देवचन्द्र लालभाई जैन पुस्तकोद्धारे ग्रन्थांकः-७२.